# प्रस्तावना

श्री योगवासिष्ठ भारत के ही नहीं, पृथ्वीमण्डल के सर्वश्रेष्ठ ग्रन्थों में से एक ग्रन्थ है। बहुत प्राचीन होने पर भी उसका 'दर्शन' आधुनिक भावों से परिपूर्ण है। उसके अध्ययन और अनुसरण करने से मनुष्य का जीवन उदार, क्रियाशील और आनन्दमय हो जाता है। किसी एक ग्रन्थ में इतने अधिक, गहरे, ऊंचे और व्यापक सिद्धान्तों का मिलना कठिन है। ग्रन्थ बहुत बड़ा, संस्कृत भाषा में, और पुराने ढङ्ग से लिखा हुआ होने के कारण आधुनिक जिज्ञासुओं के लिये उपयोगी नहीं है। इसी लिये लेखक ने अंग्रेज़ी और हिन्दी भाषा में योगवासिष्ठ के सिद्धान्तों को आधुनिक ढङ्ग से प्रतिपादित करने का प्रयत्न किया है। इस विषय पर लेखक के कई ग्रन्थ छप चुके हैं। प्रस्तुत पुस्तिका में लेखक ने श्री योगवासिष्ठ के ३२००० श्लोकों में से १६६ सारभूत और सूत्ररूप श्लोकों का क्रमात्मक संग्रह करके हिन्दी और अंग्रेज़ी भाषा में अनुवाद किया है। इस संग्रह में यह प्रयत्न किया गया है कि योगवासिष्ठ के प्रायः सभी सिद्धान्त बीजरूप से पाठक के सामने प्रस्तुत हो जायें। आशा है कि इसके पठन से जिज्ञासु लोगों का ध्यान उस महान् ग्रन्थ की ओर जायेगा।

काशी---११।५।३९ भी. ला. आत्रेय

# अथ श्रीवासिष्ठदर्शनसारः

## संसारनिःसारता :—

आयुरत्यन्तचपलं मृत्युरेकान्तनिष्ठुरः
तारुण्यं चातितरलं बाल्यं जडतया हृतम् ॥ १ ॥ ( १-२६-९ )
कालकलङ्कितो लोको बन्धवो भवबन्धनम् ।
भोगा भवमहारोगास्तृष्णाश्च मृगतृष्णिकाः ॥ २ ॥ ( १-२६-१० )
शत्रवश्चेन्द्रियाण्येव सत्यं यातमसत्यताम् ।
प्रहरत्यात्मनैवात्मा मनसैव मनो रिपुः ॥ ३ ॥ ( १-२६-११ )
आगमापायिनो भावा भावना भवबन्धनी ।
नीयते केवलं क्वापि नित्यं भूतपरम्परा ॥ ४ ॥ ( १-२६-२२ )
सर्व एव नरा मोहाद्दुराशापाशपाशिनः ।
दोषगुल्मकसारङ्गा विशीर्णा जन्मजङ्गले ॥ ५ ॥ ( १-२६-४१ )
कास्ता दृशो यासु न सन्ति दोषाः
कास्ता दिशो यासु न दुःखदाहः ।
कास्ताः प्रजा यासु न भङ्गुरत्वं
कास्ताः क्रिया यासु न नाम माया ? ॥ ६ ॥ ( १-२७-३१ )

## जिज्ञासा :—

अतोऽतुच्छमनायासमनुपाधि गतभ्रमम् ।
किं तत्स्थितिपदं साधो यत्र शोको न विद्यते ॥ ७ ॥ (१-३०-११)
क उपायो गतिः का वा का चिन्ता कः समाश्रयः ।
येनेयमशुभोदर्का न भवेज्जीविताटवी ॥ ८ ॥ ( १-३१-६ )

## अज्ञस्यैव दुःखभाजनत्वम् :—

इयं संसारसरणिर्वहत्यज्ञप्रमादतः ।

अज्ञस्योप्राणि दुःखानि सुखान्यपि दृढानि च ॥ ९ ॥ ( १-६-३३ )

**ज्ञानमेव दुःखनिवृत्त्युपायः :—**

प्राज्ञं विज्ञातविज्ञेयं सम्यग्दर्शनमाधयः ।
न दहन्ति वनं वर्षासिक्तमग्निशिखा इव ॥ १० ॥ ( २-११-४१ )

**पौरुषमहिमा :—**

अत्रैकं पौरुषं यत्नं वर्जयित्वेतरा गतिः ।
सर्वदुःखक्षयप्राप्तौ न काचिदुपपद्यते ॥ ११ ॥ ( ३-६-१४ )
यो यमर्थं प्रार्थयते तदर्थं चेहते क्रमात् ।
अवश्यं स तमाप्नोति न चेदर्धान्निवर्तते ॥ १२ ॥ ( २-४-१२ )
यो यो यथा प्रयतते स स तत्तत्फलैकभाक् ।
न तु तूष्णीं स्थितेनेह केनचित्प्राप्यते फलम् ॥ १३ ॥ ( २-७-१९ )
ये समुद्योगमुत्सृज्य स्थिता दैवपरायणाः ।
ते धर्ममर्थं कामञ्च नाशयन्त्यात्मविद्विषः ॥ १४ ॥ ( २-७-३ )
दैवं न किञ्चित्कुरुते केवलं कल्पनेदृशी । ( २-९-३ )
मूढैः प्रकल्पितं दैवं तत्परास्ते क्षयं गताः ॥ १५ ॥ ( २-८-१६ )
सिद्धस्य पौरुषेणेह फलस्य फलशालिना ।
शुभाशुभार्थसम्पत्तिर्दैवशब्देन कथ्यते ॥ १६ ॥ (२-९-४)
प्राक्स्वकर्मेतराकारं दैवं नाम न विद्यते । ( २-६-४ )
प्राक्तनं पौरुषं तद्वै दैवशब्देन कथ्यते ॥ १७ ॥ ( २-६-३५ )
द्वौ हुडाविव युध्येते पुरुषार्थौ परस्परम् ।
य एव बलवांस्तत्र स एव जयति क्षणात् ॥ १८ ॥ ( २-६-१० )

**आलस्यनिन्दा :—**

आलस्यं यदि न भवेज्जगत्यनर्थः
को न स्याद्बहुधनको बहुश्रुतो वा ।
आलस्यादियमवनिः ससागरान्ता
सम्पूर्णा नरपशुभिश्च निर्धनैश्च ॥ १९ ॥ ( २-५-३० )

**मुमुक्षुगुणाः :—**

सन्तोषः साधुसङ्गश्च विचारोऽथ शमस्तथा ।
एत एव भवाम्भोधावुपायास्तरणे नृणाम् ॥ २० ॥ ( २-१६-१८ )

**अनुभूतिरेव प्रमाणम् :—**

सर्वप्रमाणसत्तानां पदमब्धिरपामिव ।
प्रमाणमेकमेवेह प्रत्यक्षं तदतः श्रृणु ॥ २१ ॥ ( २-१९-१६ )
नात्मास्त्यनुमया राम न चाप्तवचनादिना ।
सर्वदा सर्वथा सर्वं स प्रत्यक्षोऽनुभूतितः ॥ २२ ॥ (५-७३-१५ )

**अद्वैतं सम्बन्धात् :—**

न संभवति सम्बन्धो विषमाणां निरन्तरः
न परस्परसम्बन्धाद्विनानुभवनं मिथः ॥ २३ ॥ ( ३-१२१-३७ )

**दृश्यस्य बोधरूपत्वम् :**

द्रष्टृदृश्ये न यद्येकमभविष्यच्चिदात्मके ।
तद्दृश्यास्वादमज्ञः स्याज्ञाद्दृष्ट्रेवुमिवोपलः ॥ २४ ॥ (६/२-३८-८ )

**पदार्थजातस्य संकल्पमयत्वम् :—**

मनोमनननिर्माणमात्रमेतज्जगत्त्रयम् । ( ४-११-२३ )
सर्वं संकल्परूपेण चिच्चमत्कुरुते चिति ॥ २५ ॥ ( ६/१-४२-१६ )

**जाग्रत्स्वप्नयोरभेदः :—**

जाग्रत्स्वप्नदशाभेदो न स्थिरास्थिरते विना ।
समः सदैव सर्वत्र समस्तोऽनुभवोऽनयोः ॥ २६ ॥ ( ४-१९-११)
स्वप्नोऽपि स्वप्नसमये स्थैर्याज्जाग्रत्वमृच्छति ।
अस्थैर्याज्जाग्रदेवास्ते स्वप्नस्तादृशबोधतः ॥ २७ ॥ ( ४-१९-१२ )

**जीवं जीवं प्रति विश्वस्वप्नः :—**

पृथक्प्रत्येकमुदितः प्रतिचित्तं जगद्भ्रमः । ( ३-४०-२९ )
न किञ्चिदपि जानाति निजसंवेदनादृते ॥ २८ ॥ ( ३-५५-६१ )

### सर्गादौ प्रजापतिकृतं जगत् :—

संकल्पयति यन्नाम प्रथमोऽसौ प्रजापतिः ।
तत्तदेवाशु भवति तस्येदं कल्पनं जगत् ॥ २९ ॥ ( ३-१८६-६५ )

### वाह्यार्थवादविज्ञानवादयोरैक्यम् :—

यादृगेव विराडात्मन्येष विस्तार आगतः ।
तादृगेवेह सर्वस्मिन्नणुमात्रेऽपि भूतके ॥ ३० ॥ ( ६/२-२०-७ )
प्रथमोऽसौ प्रतिस्पन्दः पदार्थानां हि बिम्बकम् ।
प्रतिबिम्बितमेतस्माद्यत्तदद्यापि संस्थितम् ॥ ३१ ॥ ( ३-५५-४८ )
महाचित्प्रतिभासत्वान्महानियतिनिश्चयात् ।
अन्योन्यमेव पश्यन्ति मिथः संपतिबिम्बितात् ॥ ३२ ॥ ( ३-५३-२५ )

### संकल्पितस्यापि संकल्पयितृत्वम् :—

यो यो नाम यथा ग्रीष्मे कलपस्वेदाद्भवेत्कृमिः ।
यद्यद्दृश्यं शुद्धचित्खं तज्जीवो भवति स्वतः ॥ ३३ ॥ ( ४-१९ ३ )

### सर्गे सर्गे सर्गान्तराणि :—

सर्गे सर्गे पृथग्रूपं सन्ति सर्गान्तराण्यपि । ( ४-१८-१६ )
तेष्वप्यन्तस्थसर्गौघाः कदलीदलपीठवत् ॥ ३४ ॥ ( ४-१८-१७ )

### परस्परमदृष्टानि सर्गजालानि :—

प्रत्येकमन्तरन्यानि तथैवाभ्युदितानि च ।
परस्परमदृष्टानि बहूनि विविधानि च ॥ ३५ ॥ ( ६/२, ६३-१२ )

### सर्वस्य सर्वत्र सर्वदा संभवः :—

सर्वत्र सर्वथा सर्वं सर्वदा सर्वरूपिणि । ( ६/२-१५९-४१ )
सर्वं सर्वात्म सर्वत्र सर्वदास्ति तथा परे ॥ ३६ ॥ ( ६/२-१३-२८ )

### अनन्तानि जगन्ति :—

अनन्तानि जगन्त्यस्मिन्ब्रह्मतत्त्वमहाम्बरे ।
अम्भोधिवीचिजलवन्निमज्जन्त्युद्भवन्ति च ॥ ३७ ॥ ( ४-४७-१४ )

**सृष्टिप्रलययोः पौनःपुन्यम् :—**

जीवौघाश्चोद्भविष्यन्ति मधाविव नवाङ्कुराः ।
तत्रैव लयमेष्यन्ति ग्रीष्मे मधुरसा इव ॥ ३८ ॥ ( ३–९५–१० )

**आकाशत्रयम् :—**

चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं वरानने ॥ ३९ ॥ ( ३-१७-१० )

**मनोरूपम् :—**

अनन्तस्यात्मतत्त्वस्य सर्वशक्तेर्महात्मनः ।
संकल्पशक्तिरचितं यद्रूपं तन्मनो विदुः ॥ ४० ॥ ( ३-९६-३ )

**मनोब्रह्मणोर्भेदः :—**

चेत्येन रहिता यैषा चित्तद्ब्रह्म सनातनम् ।
चेत्येन सहिता यैषा चित्सेयं कलनोच्यते ॥ ४१ ॥ ( ५-१३-५३ )

**मनसो रूपाणि नामानि च :—**

यथा गच्छति शैलूषो रूपाण्यलं तथैव हि ।
मनो नामान्यनेकानि धत्ते कर्मान्तरं व्रजत् ॥४२ ॥ ( ३-९६-४३ )
विचित्रकार्यवशतो नामभेदन कर्तृता ।
मनः सम्प्रोच्यते जीववासनाकर्मनामभिः ॥ ४३ ॥ ( ३–९६–५६ )

**स्वसंकल्पकृतं जीवानां वेष्टनम् :—**

स्ववासनादशावेशादाशाविवशतां गताः ।
दशास्वतिविचित्रासु स्वयं निगडिताशयाः ॥ ४४ ॥ ( ४-४३-३ )

**जीवानामसंख्येयत्वम् :—**

एवं जीवाश्रितो भावा भवभावनयोहिताः ।
ब्रह्मणः कल्पिताकाराल्लक्षशोऽप्यथ कोटिशः ॥ ४५ ॥ ( ४-४३–१ )
असंख्याताः पुरा जाता जायन्ते चापि वाद्य भोः ।
उत्पतिष्यन्ति चैवाम्बुकणौघा इव निर्झरात् ॥ ४६ ॥ ( ४-४३-२ )

**मनसो महत्त्वम् :—**

जीवः संकल्पमात्रात्मा यत्संकल्पोऽवतिष्ठते ।
हृदि भूत्वा स एवाशु बहिः प्रसरति स्फुटम् ॥ ४७ ॥ ( ३/२-२२-३७ )
सर्वं संपादयत्याशु स्वयं जीवः स्वमीहितम् । ( ३-४५-१२ )
प्रत्येकमस्ति चिच्छक्तिर्जीवशक्तिस्वरूपिणी ॥ ४८ ॥ ( ३-४५-१३ )
येन येन यथा यद्यद्यदा संवेद्यतेऽनघ ।
तेन तेन तथा तत्तत्तदा समनुभूयते ॥ ४९ ॥ ( ३-६०-१६ )
मनो निर्मलसत्त्वात्म यद्भावयति यादृशम् ।
तत्तथाशु भवत्येव यथावर्तो भवेत्पयः ॥ ५० ॥ ( ४-१७-४ )
दृढाभ्यासाभिधानेन यत्ननाम्ना स्वकर्मणा ।
निजवेदनजेनैव सिद्धिर्भवति नान्यथा ॥ ५१ ॥ ( ३/२-६७-४४ )
मनःप्रमादाद्वर्धन्ते दुःखानि गिरकूटवत् ।
तद्वशादेव नश्यन्ति सूर्यस्याग्रे हिमं यथा ॥ ५२ ॥ ( ३-९९-४३ )
मनसेदं शरीरं हि वासनार्थं प्रकल्पितम् ।
कृमिकोशप्रकारेण स्वात्मकोश इव स्वयम् ॥ ५३ ॥ ( ४-४५-७ )
अन्तःशीतलतायां तु लब्धायां शीतलं जगत् । ( ५-५६-३३ )
अन्तस्तृष्णोपतप्तानां दावादाहमयं जगत् ॥ ५४ ॥ ( ५-५६-३४ )
पूर्णे मनसि सम्पूर्णं जगत्सर्वं सुधाद्रवैः ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ ५५ ॥ ( ५-२१-१४ )
अस्य संसाररूपस्य मायाचक्रस्य राघव ।
चित्तं विद्धि महानाभिं भ्रमतो भ्रमदायिनः ॥ ५६ ॥ ( ५-५०-६ )
तस्मिन्द्रुतमवष्टब्धे धिया पुरुषयत्नतः ।
गृहीतनाभि वहनान्मायाचक्रं निरुध्यते ॥ ५७ ॥ ( ५-५०-७ )

**कोऽहम् :—**

कुसुमेष्वहमामोदः पुष्पपत्रेष्वहं छविः ।
छविष्वहं रूपकला रूपेष्वनुभवोऽप्यहम् ॥ ५८ ॥ ( ५-३४-५२ )

अपारपर्यन्तनभो दिक्कालादिक्रियान्वितम् ।
अहमेवेति सर्वत्र यः पश्यति स पश्यति ॥ ५९ ॥ ( ४-२२-२५ )
यन्नाम किञ्चित्त्रैलोक्यं स एवावयवो मम ।
तरङ्गोऽब्धाविवेत्यन्तर्यः पश्यति स पश्यति ॥ ६० ॥ ( ४-२२-३३ )

मृतिः :—

मृतो नष्ट इति प्रोक्तो मन्ये तच्च मृषा ह्यसत् । ( ५-७१-६४ )
स देशकालान्तरितो भूत्वा भूत्वानुभूयते ॥ ६१ ॥ ( ५-७१-६५ )
अनुभूय क्षणं जीवो मिथ्यामरणमूर्च्छनम् ।
विस्मृत्य प्राक्तनं भावमन्यं पश्यति सुव्रते ॥ ६२ ॥ ( ३-२०-३१ )
यत्रैव म्रियते जन्तुः पश्यत्याशु तदैवसः ।
तत्रैव भुवनाभोगमिममित्थमिव स्थितम् ॥ ६३ ॥ ( ३-४०-४५ )
आशापाशशताबद्धा वासनाभावधारिणः ।
कायात्कायमुपायान्ति वृक्षाद्वृक्षमिवाण्डजाः ॥ ६४ ॥ ( ४-४३-२६ )
तावद्भ्रमन्ति संसारे वारिण्यावर्तराशयः ।
यावन्मूढा न पश्यन्ति स्वात्मानमनिन्दितम् ॥ ६५ ॥ (४-४३-२८)
न जायते न म्रियते चेतनः पुरुषः क्वचित् ।
स्वप्नसंभ्रमवद्भ्रान्तमेतत्पश्यति केवलम् ॥ ६६ ॥ ( ३-५५-६७ )
देशकालक्रियाद्रव्यशुद्ध्यशुद्धी स्वकर्मणाम् ।
न्यूनत्वे चाधिकत्वे च नृणां कारणमायुषः ॥ ६७ ॥ ( ३-५४-२९ )

ब्रह्मा :—

सर्गादौ स्वप्नपुरुषन्यायेनादिप्रजापतिः ।
यथा स्फुटं प्रकचितस्तथाद्यापि स्थिता स्थितिः ॥६८॥ (३-५५-४७)
विरिञ्चो मनसो रूपं विरिञ्चस्य मनो वपुः । ( ३-३-३५ )
मनस्तामिव यातेन ब्रह्मणा तन्यते जगत् ॥ ६९ ॥ ( ३-३-२९ )
दिक्कालाद्यनवच्छिन्नमात्मतत्त्वं स्वशक्तितः । ( ४-४४-१४ )
लीलयैव तदादत्ते दिक्कालकलितं वपुः ॥ ७० ॥ ( ४-४४-१५ )

स्वयमन्यैवमस्मीति भावयित्वा स्वभावतः ।
अन्यतामिव संयाति स्वविकल्पात्मिकां स्वतः ॥७१॥ ( ६/१-३३-२१½ )
आतिवाहिक एवासौ देहोऽस्त्यस्य स्वयंभुवः ।
न त्वाधिभौतिको राम देहोऽजस्योपपद्यते ॥ ७२ ॥ ( ३-३-६ )
मनो नाम्नो मनुष्यस्य विरिञ्च्याकारधारिणः ।
मनोराज्यं जगदिति सत्यरूपमिव स्थितम् ॥ ७३ ॥ ( ३-३-३३ )

## शक्तिः :—

समस्तशक्तिखचितं ब्रह्म सर्वेश्वरं सदा ।
यथैव शक्त्या स्फुरति प्राप्तां तामेव पश्यति ॥ ७४ ॥ ( ३-६७-२ )
स्पन्दशक्तिस्तदिच्छेदं दृश्याभासं तनोति सा ।
साकारस्य नरस्येच्छा यथा वै कल्पनापुरम् ॥ ७५ ॥ ( ६/२-८४-६ )
सा राम प्रकृतिः प्रोक्ता शिवेच्छा पारमेश्वरी ।
जगन्मायेति विख्याता स्पन्दशक्तिरकृत्रिमा ॥ ७६ ॥ ( ६/२-८५-१४ )
ऊर्णनाभाद्यथा तन्तुर्जायते चेतनाज्जडः ।
नित्याप्रबुद्धात्पुरुषाद्ब्रह्मणः प्रकृतिस्तथा ॥ ७७ ॥ ( ३-९६-७१ )
यथैकं पवनस्पन्दमेकमौष्ण्यानलौ यथा ।
चिन्मात्रं स्पन्दशक्तिश्च तथैवैकात्म सर्वदा ॥ ७८ ॥ ( ६/२-८४-३ )

## परं ब्रह्म :—

यस्मिन्सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यत् ।
सर्वं सर्वतया सर्वं तत्सर्वं सर्वदा स्थितम् ॥ ७९ ॥ ( ६/२-१८४-४६ )
अवाच्यमनभिव्यक्तमतीन्द्रियमनामकम् । ( ६/२-५२-२७ )
स्वरूपं नोपदेशस्य विषयो विदुषो हि तत् ॥ ८० ॥ ( ६/२-३१-३७ )
प्रसरन्ति यतश्चित्राः संसारासारदृष्टयः ।
अक्षयामृतसम्पूर्णादम्भोदादिव वृष्टयः ॥ ८१ ॥ ( ३-५-१४ )
द्रष्टृदर्शनदृश्यानां त्रयाणामुदयो यतः ।
यत्र वास्तमयश्चित्खं तद्विद्धि विगतामयम् ॥ ८२ ॥ ( ६/२-१०६-११ )

अत्यन्ताभाव एवास्ति संसारस्य यथास्थितेः ।
यस्मिन्बोधमहाम्भोधौ तद्रूपं परमात्मनः ॥ ८३ ॥ ( ३-७-२० )
अशून्यमिव यच्छून्यं यस्मिञ्छून्यं जगत्स्थितम् ।
सर्गौघे सति यच्छून्यं तद्रूपं परमात्मनः ॥ ८४ ॥ ( ३-७-२२ )
न सन्नासन्न मध्यान्तं न सर्वं सर्वमेव च ।
मनोवचोभिरग्राह्यं शून्याच्छून्यं सुखात्सुखम् ॥८५॥ (३-११९-२३)

बृंहणम् :—

ब्रह्मबृंहैव हि जगज्जगच्च ब्रह्मबृंहणम् । ( ६/१-२-५१ )
ब्रह्मैव तदनाद्यन्तमब्धिवत्प्रविजृम्भते ॥ ८६ ॥ ( ६/१-२-२७ )
यः कणो या च कणिका या वीचिर्यस्तरङ्गकः ।
यः फेनो या च लहरी तद्यथा वारि वारिणि ॥ ८७ ॥ (६/१-११-४०)
यो देहो या च कलना यद्दृश्यं यौ क्षयाक्षयौ ।
या भावरचना योऽर्थस्तथा तद्ब्रह्म ब्रह्मणि ॥ ८८ ॥ (६/१-११-४१)
फलपुष्पलतापत्रशाखाविटपमूलवान् ।
वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥ ८९ ॥ ( ३-१००-११ )
चिति तत्त्वेऽस्ति नानाता तदभिव्यञ्जनात्मनि ।
विचित्रपिच्छिकापुञ्जो मयूराण्डरसे यथा ॥ ९० ॥ ( ६/१-४७-२९ )
यथा पयसि वीचीनामुन्मज्जननिमज्जनैः ।
न जलान्यत्वमेवं हि भावाभावैः परे पदे ॥ ९१ ॥ ( ६/२-१९५-२७ )

तादात्म्यम् :—

यथा कटकशब्दार्थः पृथक्त्वार्हो न काञ्चनात् ।
न हेम कटकात्तद्वज्जगच्छब्दार्थता परे ॥ ९२ ॥ ( ३-१-१७ )
पाताले भूतले स्वर्गे तृणे प्राण्यम्बरेऽपि च ।
दृश्यते तत्परं ब्रह्म चिद्रूपं नान्यदस्ति हि ॥ ९३ ॥ ( ६/१-२-२८ )

जगन्मिथ्यात्वम् :—

आदावन्ते च यन्नित्यं तत्सत्यं नाम नेतरत् । ( ५-५-९ )
आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ ९४ ॥ (४-४५-४५)

मृगतृष्णाम्ब्विवासत्यं सत्यवत्प्रत्ययप्रदम् ( ४-१-७ )
अनुभूतं मनोराज्यमिवासत्यमवास्तवम् ॥ ९५ ॥ ( ४-१-१२ )
यावदज्ञानकलना यावदब्रह्मभावना ।
यावदास्था जगज्जाले तावच्चित्तादिकल्पना ॥ ९६ ॥ (( ६/१-२-३० )

परा दृष्टिः :—

जगच्छब्दस्य नामार्थो ननु नास्त्येव कश्चन । ( ३-४-६७ )
वस्तुतस्तु जगन्नास्ति सर्वं ब्रह्मैव केवलम् ॥ ९७ ॥ ( ४-४०-३० )
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥ ९८ ॥ (६/१-१२५-१)
जगत्संविदि जातायामपि जातं न किञ्चन । ( ३-१३-४८ )
परमाकाशमाशून्यमच्छमेव व्यवस्थितम् ॥ ९९ ॥ ( ३-१३-४९ )

आनन्दः :—

आनन्दायैव भूतानि यतन्ते यानि कानि चित् । ( ६/१-१०८-२० )
आपदः सम्पदः सर्वाः सुखं दुःखाय केवलम् ॥१००॥ (६/२-९३-७३)
सर्वस्या एव पर्यन्ते सुखाशायाश्च संस्थितम् । ( ४-५-६ )
मालिन्यं दुःखमप्येवं ज्वालाया इव कज्जलम् ॥१०१॥ ( ४-५९-७ )
रम्ये धनेऽथ दारादौ हर्षस्यावसरो हि कः ।
वृद्धायां मृगतृष्णायां किमानन्दो जलार्थिनाम् ॥ १०२ ॥ ( ४-४६-३)
इच्छोदयो यथा दुःखमिच्छाशान्तिर्यथा सुखम् ।
तथा न नरके नापि ब्रह्मलोकेऽनुभूयते ॥ १०३ ॥ ( ६/२-३६-२४ )
अपि राज्यादपि स्वर्गादपीन्दरोपि माधवात् ।
अपि कान्तासमासङ्गान्नैराश्यं परमं सुखम् ॥ १०४ ॥ (५-७४-४४)
यत्र नाभ्युदितं चित्तं तत्तत्सुखमकृत्रिमम् ।
न स्वर्गादौ सम्भवति मरौ हिमग्रहं यथा ॥ १०५ ॥ ( ६/१-४४-२६ )
क्षणं वर्षसहस्रं वा तत्र लब्ध्वा स्थितिं मनः ।
एतिमेति न भोगौघे दृष्टस्वर्ग इवाननौ ॥ १०६ ॥ (५-५४-६९)

**बन्धमोक्षौ :—**

वासनानातन्तुबद्धा ये आशापाशवशीकृताः ।
वश्यतां यान्ति ते लोके रज्जुबद्धाः खगा इव ॥१०७॥ (४-२७-१८)
अनन्तस्याप्रमेयस्य येनेयत्ता प्रकल्पिता ।
आत्मनस्तस्य तेनात्मा स्वात्मनैव वशीकृतः ॥ १०८ ॥ (४-२७-२३)
ब्रह्मणो व्यतिरिक्तत्वं ब्रह्मार्णवगता अपि ।
भावयन्तो विमुह्यन्ति भीमासु भवभूमिषु ॥ १०९ ॥ ( ४-१२-३ )
हेतुर्विहरणे तेषामात्मविस्मरणादृते ।
न कश्चिल्लक्ष्यते साधो जन्मान्तरफलप्रदः ॥ ११० ॥ (३-९५-१४)
अहमित्येव संकल्पो बन्धायातिविनाशिने ।
नाहमित्येव संकल्पो मोक्षाय विमलात्मने ॥ १११ ॥ (६/पू-९९-११)
अपरिज्ञात आत्मैव भ्रमतां समुपागतः ।
ज्ञात आत्मत्वमायाति सीमान्तः सर्वसंविदाम् ॥ ११२ ॥ (६/पू-१०-४)
अज्ञानस्य महाग्रन्थेर्मिथ्यावेद्यात्मनोऽसतः ।
अहमित्यर्थरूपस्य भेदो मोक्ष इति स्मृतः ॥ ११३ ॥ ( ६/उ-२०-१७ )

**मोक्षोपायः :—**

ज्ञानयुक्तिप्लवेनैव संसाराब्धिं सुदुस्तरम् ।
महाधियः समुत्तीर्णा निमेषेण रघूद्वह ॥ ११४ ॥ ( २-११-३६ )
न तीर्थेन न दानेन न स्नानेन न विद्यया ।
न ध्यानेन न योगेन न तपोभिर्नचाध्वरैः ॥ ११५ ॥ (६/उ-१७४-२४)
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मात्मना न चेत्त्रातस्तदुपायोऽस्ति नेतरः ॥११६॥ (६/उ-१६२-१८)
यद्यदासाद्यते किञ्चित्केनचित्क्वचिदेव हि ।
स्वशक्तिसंप्रवृत्त्या तल्लभ्यते नान्यतः क्वचित् ॥ ११७ ॥ (५-४३-१३)
सर्वेषामुत्तमस्थानानां सर्वासां चिरसंपदाम् ।
स्वमनोनिग्रहो भूमिर्भूमिः शस्यश्रियामिव ॥ ११८ ॥ (५-४३-३५)

क्रियते माधवादीनां प्रणयप्रार्थना स्वयम् ।
तथैव क्रियते कस्मान्न स्वकस्यैव चेतसः ॥ ११९ ॥ (५-४३-२५)
सर्वस्यैव जनस्यास्य विष्णुरभ्यन्तरे स्थितः ।
तं परित्यज्य ये यान्ति बहिर्विष्णुं नराधमाः ॥ १२० ॥ (५-४३-२६)
गुरुश्चेदुद्धरत्यज्ञमात्मीयात्पौरुषादृते ।
उष्ट्रं दान्तं बलीवर्दं तत्कस्मान्नोद्धरत्यसौ ॥ १२१ ॥ (५-४३-१६)
मूलं स्वकर्मणः संविन्मनसो वासनात्मनः । (६/२-२-४३)
त्यागे हि कर्मणां तस्मादादेहं नोपपद्यते ॥ १२२ ॥ (६/२-२-४२)

ज्ञानसिद्धिः :—

व्याचष्टे यः पठति च शास्त्रं भोगाय शिल्पिवत् ।
यतते न त्वनुष्ठाने ज्ञानबन्धुः स उच्यते ॥ १२३ ॥ ( ६/२-२१-३ )
जन्मान्तरशताभ्यस्ता राम संसारसंस्थितिः ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ १२४ ॥ (५-९२-३२
एकतत्त्वघनाभ्यासः प्राणानां विलयस्तथा ।
मनोविनिग्रहश्चेति मोक्षशब्दार्थसंग्रहः ॥ १२५ ॥ ( ६/१-६९-२७ )
त्रिष्वेतेषु प्रयोगेषु मनःप्रशमनं वरम् ।
साध्यं विद्धि तदेवाशु यथा भवति तच्छिवम् ॥१२६॥ (६/१-६९-२९)
वैराग्यात्कारणाभ्यासाद्युक्तितो व्यसनक्षयात् ।
परमार्थावबोधाच्च रोध्यन्ते प्राणवायवः ॥ १२७ ॥ ( ५-१३-८५ )
चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः ।
स्थीयते चेत्तदाक्रम्य तन्न किञ्चित्प्रबाधते ॥ १२८ ॥ (५-४९-४०)
मन एव विचारेण मन्ये विलयमेष्यति ।
मनोविलयमात्रेण ततः श्रेयो भविष्यति ॥ १२९ ॥ ( ३-९७-१० )
वासनैव महाराज स्वरूपं विद्धि चेतसः ।
चित्तशब्दस्तु पर्यायो वासनाया उदाहृतः ॥ १३० ॥ (६/१-९४-५)

सप्त ज्ञानभूमयः :—

अवबोधं विदुर्ज्ञानं तदिदं सप्तभूमिकम् ।

मुक्तिस्तु ज्ञेयमित्युक्तं भूमिकासप्तकात्परम् ॥ १३१ ॥ ( ३-११८-३ )
ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ।
विचारणा द्वितीया तु तृतीया तनुमानसा ॥ १३२ ॥ (३-११८-५)
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ १३३ ॥ (३-११८-६)

कर्मपाशोच्छेदः :—

न स शैलो न तद्व्योम न सोऽब्धिश्चन विष्टपम् ।
अस्ति यत्र फलं नास्ति कृतानामात्मकर्मणाम् ॥ १३४ ॥ (३-९५-३३)
कर्मबीजं मनस्पन्दः कथ्यतेऽथानुभूयते ।
क्रियास्तु विविधास्तस्य शाखाश्चित्रफलास्तरोः ॥१३५॥ (३-९६-११)
अकारणमुपायान्ति सर्वे जीवाः परात्पदात् । (६/१-१२४-४)
पश्चात्तेषां स्वकर्माणि कारणं सुखदुःखयोः ॥ १३६ ॥ (६/१-१२४-५)
सर्वा हि वासनाभावे प्रयान्त्यफलतां क्रियाः ।
अशुभाः फलवन्त्योऽपि सेकाभावे लता इव ॥१३७॥ (६/१-८७-१९)
समया स्वच्छया बुद्ध्या सततं निर्विकारया ।
यथा यत्क्रियते राम तददोषाय सर्वदा ॥ १३८ ॥ ( ६/२-१९९-७ )

आत्मानुभवः :—

संसारवासनाजाले खगजाल इवाखुना ।
त्रोटिते हृदयग्रन्थौ श्लथे वैराग्यरंहसा ॥ १३९ ॥ ( ४-२२-७ )
कातकं फलमासाद्य यथा वारि प्रसीदति ।
तथा विज्ञानवशतः स्वभावः संप्रसीदति ॥ १४० ॥ ( ४-२२-८ )

जीवन्मुक्तलक्षणानि :—

नालम्बते रसिकतां न च नीरसतां क्वचित् ।
नार्थेषु विचरत्यर्थी वीतरागः सरागवत् ॥ १४१ ॥ (६/२-१०२-१३)
मनोज्ञमधुराचाराः प्रियपेशलवादिनः । ( ६/२-९८-३ )
ववेचितारः कार्याणां निर्णेतारः क्षणादपि ॥ १४२ ॥ ( ६/२-९८-४ )

उपेक्षते न संप्राप्तं नाप्राप्तमभिवाञ्छति ।
सोम्यसौम्यो भवत्यन्तः शीतलः सर्ववृत्तिषु ॥१४३॥ (६/२-४५-१०)
अनुद्वेगकराचारा बान्धवा नागरा इव ।
बहिः सर्वसमाचारा अन्तः सर्वार्थशीतलाः ॥ १४४ ॥ (६/२-९८-५)
वर्णधर्माश्रमाचारशास्त्रयन्त्रणयोज्झितः ।
निर्गच्छति जगज्जालात्पञ्जरादिव केसरी ॥ १४५ ॥ (६/१-१२२-२)
न बिभेति न वादत्ते वैवश्यं न च दीनताम् ।
समः स्वस्थमना मौनी धीरस्तिष्ठति शैलवत् ॥ १४६ ॥ (५-९३-५५)
अनुबन्धपरे जन्तावसंसक्तेन चेतसा ।
भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ १४७ ॥ (५-७७-१३)
बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान् ।
युवा यौवनवृत्तेषु दुःखेष्वनुदुखितः ॥ १४८ ॥ ( ५-७७-१४ )
अयत्नोपनतं सर्वं लीलयाऽसक्तमानसः ।
भुंक्ते भोगभरं प्राज्ञस्त्वालोकमिव लोचनम् ॥ १४९ ॥ ( ५-७४-६३ )
न त्यजन्ति न वाञ्छन्ति व्यवहारं जगद्गतम् ।
सर्वमेवानुवर्तन्ते पारावारविदो जनाः ॥ १५० ॥ ( ४-४६-२६ )
परिस्फुरति यस्यान्तर्नित्यं सत्त्वचमत्कृतिः । ( ४-३२-३८ )
ब्राह्ममण्डमिवाखण्डं लोकेशाः पालयन्ति तम् ॥ १५१ ॥ (४-३२-३९)
बलं बुद्धिश्च तेजश्च दृष्टतत्त्वस्य वर्द्धते ।
सवसन्तस्य वृक्षस्य सौन्दर्याद्या गुणा इव ॥ १५२ ॥ ( ५-७६-२० )

कुलस्त्रीणां महत्त्वम् :—

मोहादनादिगहनादनन्तगहनादपि ।
पतितं व्यवसायिन्यस्तारयन्ति कुलस्त्रियः ॥१५३॥ (६/१-१०९-२६)
शास्त्रार्थगुरुमन्त्रादि तथा नोत्तरणक्षमम् ।
यथैताः स्नेहशालिन्यो भर्तृणां कुलयोषितः ॥१५४॥ (६/१-१०९-२७
सखा भ्राता सुहृद्भृत्यो गुरुर्मित्रं धनं सुखम् ।
शास्त्रमायतनं दासः सर्वं भर्तुः कुलाङ्गनाः ॥१५५॥ (६/१-१०९-२८)

**सर्वबन्धुत्वम् :—**

अयं बन्धुरयं नेति गणना लघुचेतसाम् ।
उदारचरितानां तु विगतावरणैव धीः ॥ १५६॥ ( ५-१८-६१ )
एकत्वे विद्यमानस्य सर्वगस्य किलात्मनः ।
अयं बन्धुः परश्चायमित्यसौ कलना कुतः ॥१५७॥ ( ५-२०-४ )
सर्वा एव हि ते भूतजातयो राम बन्धवः ।
अत्यन्तासंयुता एतास्तव राम न काश्चन ॥ १५८ ॥ ( ५-१८-४६ )

**सर्वधर्मैकता :—**

सर्वैरेव च गन्तव्यं तैः पदं पारमार्थिकम् ।
विचित्रं देशकालोत्थैः पुरमेकमिवाध्वगैः ॥ १५९ ॥ ( ३-९६-५१ )
अज्ञानात्परमार्थस्य विपरीतावबोधतः ।
केवलं विवदन्त्येते विकल्पैरारुरुक्षवः ॥ १६० ॥ ( ३-९६-५२ )
स्वमार्गमभिशंसन्ति वादिनश्चित्रया दृशा ।
विचित्रदेशकालोत्था मार्गं स्वं पथिका इव ॥ १६१ ॥ ( ३-५६-५३ )

**युक्तियुक्तशास्त्रस्यैवोपादेयता :—**

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना ॥ १६२ ॥ ( २-१८-३ )
योऽस्मत्तातस्य कूपोऽयमिति कौपं पिबत्यपः ।
त्यक्त्वा गाङ्गं पुरःस्थं तं को नाशास्त्यतिरागिणम् ॥१६३॥ (२-१८-४)
अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम् ।
अन्यत्वार्षमपि त्याज्यं भाव्यं न्याय्यैकसेविना ॥१६४॥ (२-१८-२)

**योगवासिष्ठमाहात्म्यम् :—**

एतच्छास्त्रघनाभ्यासात्पौनःपुन्येन वीक्षणात् ( २-१८-३६ )
बोधस्यापि परं बोधं वुद्धिरेति न संशयः ॥ १६५ ॥ ( ३-८-१३ )
परा नागरतोदेति महत्वगुणशालिनी । (२-१८-८ )
जीवन्मुक्तत्वमस्मिंस्तु श्रुतेऽनुभूयते ॥ १६६ ॥ ( ३-८-१५ )

**इति श्रीवासिष्ठदर्शनसारः ।**

# श्री वासिष्ठदर्शनसार

**संसार की निःसारता :—**

आयु अत्यन्त चपल है, मृत्यु सर्वथा क्रूर है ; युवा अवस्था अत्यन्त ही चञ्चल है ; और बाल्यावस्था अज्ञान में ही नष्ट हो जाती है ॥ १ ॥ सब लोग काल से कलङ्कित हो रहे हैं। सब बन्धु-जन संसार की बेड़ियाँ हैं ; जितने भोग हैं वे सब महारोग हैं ; और तृष्णा केवल मृगतृष्णा है ॥ २ ॥ अपनी इन्द्रियाँ ही अपने शत्रु हैं। सत्य भी असत्यता को प्राप्त हो गया है ; आत्मा ही आत्मा का हनन करता है और मन ही मन का दुश्मन हो रहा है ॥ ३ ॥ सारे भाव आने और जाने वाले अर्थात् उत्पन्न और नष्ट होने वाले हैं। विषयों की भावना ही संसार से सबको बाँधती है। न जाने ये सब प्राणी कहाँ ले जाये जा रहे हैं ॥ ४ ॥ सब मनुष्य मोह के वशीभूत हुए, दुःखदायी आशाओं की फाँसी में बँधे हुए, और दोषरूपी झाड़ों में अटके हुए मृगों के समान, जीवन-रूपी जङ्गल में भटक रहे हैं ॥ ५ ॥ ऐसी कौनसी दृष्टि है जो निर्दोष हो ? ऐसी कौनसी दिशा है जिसमें दुःख की अग्नि से प्राणी न जल रहे हों ? ऐसी कौनसी उत्पन्न वस्तु है जो नश्वर न हो ? ऐसा कौनसा कार्य है जिसमें माया ( धोखा ) न हो ? ॥ ६ ॥

**जिज्ञासा :—**

इसलिये हे साधो ! आयास-रहित, उपाधि-रहित, भ्रम-रहित, वह कौनसी सत्य स्थिति है जिसमें शोक न हो ? ॥ ७ ॥ कौनसा ऐसा उपाय है, कौनसा ऐसा मार्ग है, कौनसा ऐसा विचार है, कौनसा ऐसा आश्रय है कि जिसके द्वारा यह जीवन-रूपी जङ्गल दुःखदायी न हो ? ॥८॥

**अज्ञानी को ही दुःख होता है :—**

यह संसाररूपी प्रवाह अज्ञानी की ही मूर्खता से चल रहा है। अज्ञानी को ही घोर दुःख-सुख होते हैं ॥ ९ ॥

**ज्ञान द्वारा ही दुःख से मुक्ति होती है :—**

जिस प्रकार वर्षा से भीगे हुए बन को अग्नि की ज्वालाएँ नहीं जला सकतीं, उसी प्रकार मानसिक दुःख भी ज्ञानी को, जिसने जो कुछ जानने योग्य है जान लिया है और युक्त दृष्टि प्राप्त कर ली है, वेदना नहीं दे सकते ॥ १० ॥

**पुरुषार्थ-महिमा :—**

यहाँ पर (संसार में) सब दुःखों का क्षय करने के लिये पुरुषार्थ (मनुष्य के यत्न) के अतिरिक्त दूसरा कोई मार्ग नहीं है ॥ ११ ॥ जो जिस पदार्थ के पाने की इच्छा करता है और उसको प्राप्त करने के लिये क्रमशः यत्न करता है, वह उसको अवश्य ही प्राप्त कर लेता है, यदि बीचमें प्रयत्न को न छोड़ दे ॥ १२ ॥ यहाँ पर चुपचाप बैठे रहने से कुछ प्राप्त नहीं होता, जो जो जैसा जैसा यत्न करता है वैसा वैसा ही फल पाता है ॥ १३ ॥ जो उद्योग को छोड़ कर भाग्य (तकदीर) के ऊपर भरोसा करते हैं वे अपने ही दुश्मन हैं और धर्म, अर्थ और काम सब को नष्ट कर देते हैं ॥ १४ ॥ दैव (भाग्य) कभी कुछ नहीं करता, यह केवल कल्पना मात्र है कि दैव ही सब कुछ करता है। दैव मूर्ख लोगों की कल्पना है; इस कल्पना के भरोसे रह कर वे नाश को प्राप्त होते हैं ॥ १५ ॥ फल देने वाले पुरुषार्थ द्वारा शुभाशुभ अर्थ प्राप्तिरूप फलसिद्धि का नाम ही दैव है ॥ १६ ॥ पूर्वकृत कर्म (पुरुषार्थ) के अतिरिक्त दैव और कोई वस्तु नहीं है; पूर्वकृत पुरुषार्थ ही का नाम दैव है ॥ १७ ॥ दोनों पुरुषार्थ (पूर्वकृत जिसका नाम दैव है और वर्तमान काल का पुरुषार्थ) दो मेढ़ों के समान एक दूसरे से लड़ते हैं, जो उनमें अधिक बल वाला होता है वही विजय पाता है ॥ १८ ॥

**आलस्य की निन्दा :—**

यदि जगत् में आलस्यरूपी अनर्थ न होता तो कौन धनी और विद्वान् न होता। आलस्य के कारण ही यह समुद्र पर्यन्त पृथ्वी निर्धन और मूर्ख (मनुष्य के रूप में पशु) लोगों से भरी पड़ी है ॥ १९ ॥

**मुमुक्षु के गुण :—**

शम, सन्तोष, साधुसङ्ग और विचार ये चार संसारसमुद्र से मनुष्य के पार उतरने के उपाय हैं ॥ २० ॥

**अनुभव ही प्रमाण है :—**

जैसे समुद्र सब जलों का अन्तिम स्थान है वैसे ही सब प्रमाणों का आधार प्रमाण एक प्रत्यक्ष ही यहाँ पर माना गया है, उसको सुनो ॥२१॥ आत्मा का ज्ञान न अनुमान से होता है और न आप्तवचन (शब्द) से। आत्मा का पूर्णतया और सर्व प्रकार से प्रत्यक्ष सदा स्वानुभूति द्वारा होता है ॥ २२ ॥

**सम्बन्ध से अद्वैत सिद्ध है :—**

असमान वस्तुओं में कभी सम्बन्ध नहीं हो सकता और सम्बन्ध के विना एक वस्तु को दूसरी वस्तु का ज्ञान नहीं हो सकता ॥२३॥

**दृश्य पदार्थ बोध-रूप ही हैं :—**

यदि द्रष्टा और दृश्य चित्स्वरूप में एक न हों तो जिस प्रकार पत्थर गन्ने के मिठास से अनभिज्ञ रहता है, उसी प्रकार द्रष्टा को भी दृश्य का ज्ञान नहीं हो सकता ॥ २४ ॥

**संसार के सब पदार्थ कल्पनामय हैं:—**

मनन (मन के कार्य) के अतिरिक्त संसार कुछ नहीं है। तीनों जगत् मन के मनन से ही निर्मित हैं। चित्त अपने भीतर इस सारे संसार को संकल्प के रूप में रचता है ॥ २५ ॥

**जाग्रत् और स्वप्न का अभेद :—**

जाग्रत् और स्वप्न में इसके सिवाय कि एक स्थिर अनुभव का नाम है और दूसरा अस्थिर का, और कोई भेद नहीं है। सदा और सर्वत्र दोनों दशाओं का अनुभव समान है ॥ २६ ॥ स्वप्न के समय स्वप्न भी स्थिर रहने के कारण जाग्रत् ही प्रतीत होता है। जाग्रत् भी अस्थिर रूप से जाने जाने पर स्वप्न ही प्रतीत होने लगता है ॥ २७ ॥

**प्रत्येक जीव में विश्व का स्वप्न होता है :—**

प्रत्येक जीव को पृथक् पृथक् जगद्भ्रम होता है, और जिसको जो अनुभव होता है वह उसके अतिरिक्त और कुछ नहीं जानता ॥ २८ ॥

**सृष्टि के आरम्भ में ब्रह्मा ने इस जगत् को रचा :—**

यह सबसे प्रथम उत्पन्न हुआ ब्रह्मा ( प्रजापति ) जैसा जैसा संकल्प करता है वैसी वैसी ही सृष्टि होती चली जाती है ॥ २९ ॥

**बाह्यार्थवाद और विज्ञानवाद की एकता :—**

जैसा यह विस्तृत जगत् विराट् आत्मा ( ब्रह्मा ) में है वैसा ही अणुमात्र में भी है ॥ ३० ॥ सबसे पहिला स्पन्दन पदार्थों का विम्ब है और अभी तक उसी प्रकार मौजूद है। हमारा अपना जगत् इसी का प्रतिबिम्ब है ॥ ३१ ॥ महाचिति के आभास होने के कारण, महा नियति द्वारा नियंत्रित होने के कारण, एक दूसरे में प्रतिबिम्बित होने से सब प्राणी एक दूसरे को देखते हैं ॥ ३२ ॥

**संकल्पित पदार्थ में भी संकल्प करने की शक्ति होती है :—**

प्रत्येक दृश्य-पदार्थ स्वयं इस प्रकार जीव हो जाता है जैसे गर्मी की मौसम में प्राणियों के शरीर के मैल और पसीने से उत्पन्न हुई वस्तुएँ स्वयं प्राणी बन जाती हैं ॥ ३३ ॥

**सृष्टि के भीतर अनन्त सृष्टियों की परम्परा :—**

प्रत्येक सृष्टि के भीतर नाना प्रकार की अनेक दूसरी सृष्टियाँ हैं; उनके भीतर और दूसरी; उनके भीतर और अनेक; इस प्रकार यह सिलसिला केले के तने की भाँति चलता ही रहता है ॥ ३४ ॥

**परस्पर अदृष्ट अनन्त सृष्टियाँ :—**

प्रत्येक जीव के भीतर बहुत सी नाना प्रकार की एक दूसरी के प्रति अज्ञात सृष्टियाँ उदय हो रही हैं ॥ ३५ ॥

**सब कुछ सदा सब जगह है :—**

सब कुछ सभी स्थान पर सदा ही सब रूप वाले ( ब्रह्म ) में है। परब्रह्म में सब पदार्थ सर्व रूप से सर्वदा सब जगह हैं ॥ ३६ ॥

**जगत् अनन्त हैं :—**

इस ब्रह्मरूपी आकाश में अनन्त प्रकार के अनन्त जगत् इस प्रकार उत्पन्न और नष्ट होते रहते हैं जैसे कि समुद्र में लहरें ॥ ३७ ॥

**सृष्टि और प्रलय का वार २ होना :—**

जैसे चैत्र के महीने में नये अङ्कुर उत्पन्न होते हैं और ग्रीष्म ऋतु में सब रस सूख जाते हैं उसी प्रकार जीवगण उत्पन्न होते हैं और जहाँ से उत्पन्न हुए थे उसी में लय को प्राप्त हो जाते हैं ॥ ३८ ॥

**तीन आकाश :—**

आकाश, चित्ताकाश और चिदाकाश—ये तीन आकाश ( सर्व व्यापक पदार्थ ) हैं। इनमें चिदाकाश सबसे सूक्ष्म है ॥ ३९ ॥

**मन का रूप :—**

अनन्त, सर्वशक्तियुक्त, महान् आत्मा के सङ्कल्प शक्ति द्वारा रचे हुए रूप का नाम मन है ॥ ४० ॥

**मन और ब्रह्म में भेद :—**

चेत्य (दृश्य) से रहित चित् (आत्मा) सनातन ब्रह्म है। वही चित् (आत्मा) चेत्य (दृश्य) युक्त होने पर मन कहलाता है ॥ ४१ ॥

**मन के रूप और नामः —**

जैसे एक ही नट (नाटक का पात्र) अनेक रूप धारण कर लेता है वैसे ही भिन्न २ कामों को करते समय मन भी अनेक नाम और रूपों को धारणकर लेता है ॥ ४२ ॥ नाना प्रकार की क्रियायें करते समय मन के अनेक नाम होते हैं—कभी यह जीव कहलाता है, कभी वासना और कभी कर्म इत्यादि ॥ ४३ ॥

**जीवों का बन्धन अपने ही संकल्प से है :—**

अपनी वासनाओं के द्वारा प्राप्त दशा से वशीभूत होने के कारण जीव नाना प्रकार के बन्धनों में बँधे हुए हैं ॥ ४४ ॥

**जीव असंख्य हैं :—**

इस प्रकार संसार की भावना से युक्त, चिति के रूपान्तर जीव, कल्पित आकार वाले ब्रह्मा से, लाखों और करोड़ों की संख्या में उत्पन्न हुए ॥ ४५ ॥ पहिले भी ये जीव असंख्य तादाद में पैदा हुए, और अब भी अनगिनित उत्पन्न होते हैं। झरने से झरते हुए जल के कणों की तरह आगे भी असंख्य जीव पैदा होंगे ॥ ४६ ॥

**मन का महत्व :—**

जीव सङ्कल्परूप है। यह हृदय में जो कुछ संकल्प करता है वह शीघ्र ही उसी रूप से बाहर (बाह्य जागत्) में प्रकट होता है ॥ ४७ ॥ जीव आप ही अपने सभी अभीष्टों को शीघ्र अपनी शक्ति से सम्पादित कर लेता है। प्रत्येक जीव में चित्-शक्ति (आत्मा की अनन्त और अपार शक्ति) वर्त्तमान है ॥ ४८ ॥ जो जो जिस जिस वस्तु की जब जब जैसी जैसी कल्पना करता है सो सो उस उस वस्तु का उस उस समय उसी प्रकार अनुभव करता है ॥ ४९ ॥ निर्मल तथा सात्विक मन जिस वस्तु में जैसी भावना करता है, वह वस्तु शीघ्र ही उसी रूप में परिणत हो जाती है, जैसे कि जल आवर्त रूप में ॥ ५० ॥ यत्न नाम वाले अपने ही पुरुषार्थ से, जिसका नाम दृढ़ अभ्यास है, मनुष्य को संसार में कामयाबी होतीहै; किसी दूसरे साधन से नहीं ॥ ५१ ॥ मन की मूर्खता से दुःख पहाड़ की चोटी की नाईं बढ़ते हैं और मन के वश में होते ही दुःखों का इस प्रकार नाश हो जाता है जैसे कि सूर्य के उदय होने पर पाले का ॥ ५२ ॥ जैसे रेशम का कीड़ा अपने रहने के लिये अपने आपही अपना कोश तैयार कर लेता है वैसे ही मन ने भी यह शरीर अपनी वासनाओं की पूर्ति करने के लिये बनाया है ॥ ५३ ॥ अपने

भीतर ही यदि शान्ति प्राप्त हो गई, तो सारा संसार शान्त दिखाई पड़ने लगता है। जो अपने भीतर ही तृष्णा की आग से जल रहा हो उसके लिये सारे संसार में आग सी लगी रहती है ॥ ५४ ॥ मन के पूर्ण होने पर सारा संसार अमृत से भरपूर दिखाई पड़ता है, जैसे कि जूता पहने हुए पुरुष के लिये समस्त पृथ्वी चमड़े से ढकी हुई सी प्रतीत होती है ॥५५॥ हे राघव ! इस भ्रम पैदा करने वाले, घूमने वाले, संसाररूपी मायाचक्र की नाभि चित्त है ॥ ५६ ॥ इस नाभि को बुद्धि और पुरुषार्थ द्वारा जोर से पकड़ कर रोक लेने से मायाचक्र की गति रुक जाती है ॥ ५७ ॥

मैं कौन हूँ ? :—

फूलों में मैं खुशबू हूँ, मैं फूल पत्तियों का सौन्दर्य हूँ। सुन्दर वस्तुओं का रूप कला मैं हूँ; और सब रूपों में मैं अनुभव हूँ ॥ ५८ ॥ जो यह समझता है कि "मैं चित्त नहीं हूँ, मैं वह आत्मा हूँ जिसमें जगत् की सारी वस्तुएँ इस प्रकार पिरोई हुई हैं जैसे कि माला के तागे में उसके मोती," वही ठीक समझता है ॥ ५९ ॥ जो यह समझता है कि जैसे तरङ्ग समुद्र का एक क्षुद्र अङ्ग है वैसे ही तीनों लोकों में जो कुछ है वह मेरा ही अङ्ग है" वही ठीक समझता है ॥ ६० ॥

मौत :—

ऐसा कहना कि मरा हुआ प्राणी नष्ट हो गया है बिल्कुल झूठ है; वह तो मरने पर दूसरे देश और काल में दूसरी सृष्टि का अनुभव करने लगता है ॥ ६१ ॥ मिथ्या मौत की मूर्छा का कुछ देर तक अनुभव करके, पूर्व अवस्था को भूल कर, जीव दूसरी अवस्था का अनुभव करने लगता है ॥ ६२ ॥ जहाँ पर यह प्राणी मरता है उसी स्थान पर शीघ्र ही इसी प्रकार से स्थित दूसरे जगत् का अनुभव करता है ॥ ६३ ॥ जैसे पक्षी एक वृक्ष से उड़कर दूसरे वृक्ष पर चले जाते हैं उसी प्रकार सैकड़ों आशारूपी फाँसों में जकड़े हुए, वासनाओं को हृदय में धारण किये हुए, जीव एक शरीर से दूसरे शरीर में जाते हैं ॥ ६४ ॥ अज्ञानी

जीव जब तक अपने शुद्ध आत्मा का दर्शन नहीं कर लेते तब तक जल में भँवरों के समान भ्रमण करते रहते हैं ॥ ६५ ॥ चेतन पुरुष न कहीं मरता है और न उत्पन्न होता है। केवल स्वप्न-भ्रम की तरह इस जगत् के भ्रम का अनुभव करता है ॥ ६६ ॥ मनुष्यों की आयु के अधिक और कम होने में देश, काल, क्रिया और द्रव्यों की तथा उनके किये हुए कर्मों की शुद्धि और अशुद्धि ही कारण होते हैं ॥ ६७ ॥

**ब्रह्मा :—**

सृष्टि के आदि में स्वप्नपुरुष की नाईं जो आदि प्रजापति ( प्रथम सृष्टिकर्ता ब्रह्मा ) उत्पन्न हुआ था वह अब भी स्थित है ॥६८॥ मन ब्रह्मा का स्वरूप है और ब्रह्मा मन का स्वरूप है। मन का रूप धारण करके ही ब्रह्मा सृष्टि उत्पन्न करता है ॥ ६९ ॥ देश, काल आदि से अपरिमित आत्मतत्त्व अपनी ही शक्ति से लीला द्वारा देश और काल से परिमित रूप को धारण कर लेता है ॥ ७० ॥ निज स्वभाव से प्रेरित होकर वह स्वयं ही यह भावना करता है कि मैं दूसरा हूँ। और इस भावना के कारण वह स्वयं कल्पित अन्यता को प्राप्त होता है ॥ ७१ ॥ इस स्वयंभू ( ब्रह्मा ) का शरीर सूक्ष्म ही है; स्थूल नहीं है ॥ ७२ ॥ यह जगत् ब्रह्मा का आकार धारण करने वाले मन नामक जीव ( ब्रह्मा ) का मनोराज्य ( कल्पना ) है, किन्तु सत्य प्रतीत होता है ॥ ७३ ॥

**शक्ति :—**

सब का ईश्वर ( नियन्ता ) ब्रह्म सब शक्तियों से सम्पन्न है। वह जिस शक्ति को चाहे जहाँ पर प्रकट कर सकता है ॥ ७४ ॥ जैसे शरीरधारी मनुष्य की इच्छा कल्पना के नगर की रचना कर लेती है वैसे ही भगवान् की स्पन्दशक्तिरूपिणी इच्छा इस दृश्य जगत् की रचना करती है ॥ ७५ ॥ परमेश्वर (शिव) की वह स्वाभाविक स्पन्दशक्ति

प्रकृति कहलाती है और वही जगन्माया ( जगत् को रचने वाली ) के नाम से भी प्रसिद्ध है ॥७६॥ जिस प्रकार चेतन मकड़ी से जड़ जाले की उत्पत्ति होती है उसी प्रकार नित्य ज्ञानस्वरूप पुरुष (ब्रह्म) से प्रकृति उत्पन्न होती है ॥७७॥ जिस प्रकार वायु और उसका चलना और अग्नि तथा उसकी उष्णता एक ही हैं, उसी प्रकार चिन्मात्र ( ब्रह्म ) तथा उसकी स्पन्दनशक्ति एक ही हैं ॥ ७८ ॥

**परम ब्रह्म :—**

ब्रह्म वह परम तत्त्व है जिसमें सब कुछ है, जो सब ओर है, जो पूर्ण रूप से सब कुछ है, जो कि सदा और सब जगह पूर्ण रूप से स्थित है ॥७९॥ ब्रह्म केवल उसके जानने वाले के अनुभव में ही आ सकता है, उसका वर्णन नहीं हो सकता। वह अवाच्य है ( शब्दों द्वारा उसका वर्णन नहीं हो सकता ) अनभिव्यक्त है ( किसी प्रकार उसको प्रकट नहीं कर सकते ), इन्द्रियों से परे है ( अर्थात् इन्द्रियों द्वारा उसका ज्ञान नहीं हो सकता ), और उसको कोई विशेष नाम नहीं दिया जा सकता ॥८०॥ जैसे बादल से वर्षा की बूँदें गिरती हैं वैसे ही उस अक्षय और पूर्ण अमृत से नाना प्रकार के असार संसारों के दृश्य उदय होते हैं ॥८१॥ ब्रह्म वह निर्विकार चिदाकाश है जिससे द्रष्टा, दर्शन और दृश्य तीनों का उदय होता है और जिसमें इनका अस्त भी होता है ॥ ८२ ॥ परमात्मा वह ज्ञानरूपी महासमुद्र है जिसमें यथास्थित संसार का अत्यन्त अभाव है ॥ ८३ ॥ जो शून्य होते हुए भी अशून्य के समान है; जिसमें जगत् वर्तमान रहता हुआ भी शून्य है; जो सृष्टिसमूह के होते हुए भी शून्य है; वह परमात्मा का स्वरूप है ॥ ८४ ॥ वह न सत् है न असत्; न दोनों का मध्य; वह कुछ भी नहीं है तो भी सब कुछ है, वह मन और वचन में आने वाली कोई वस्तु नहीं है; वह शून्य से भी शून्य और सुख से भी अधिक सुखरूप ( अर्थात् परमानन्द ) है ॥ ८५ ॥

**विकास :—**

ब्रह्म की वृंहा (वर्द्धनशक्ति) ही जगत् है और जगत् ब्रह्म का वृंहण है। अनादि और अनन्त ब्रह्म ही समुद्र की नाईं बढ़ रहा है ॥ ८६ ॥ जैसे जल की बूँदें, कण, लहर, तरङ्ग, फेन, भँवर आदि जल में जल ही हैं ॥ ८७ ॥ वैसे ही शरीर, इच्छा, दृश्य जगत्, सृष्टि और प्रलय, भाव की उत्पत्ति, विषय आदि जो कुछ भी जगत में है वह सब ब्रह्म में ब्रह्म ही है ॥ ८८ ॥ जैसे जड़, तने, शाख, पत्तों, बेल, फूल और फलों वाला वृक्ष अपने बीज के भीतर मौजूद रहता है वैसे यह जगत् ब्रह्म में मौजूद रहता है ॥ ८९ ॥ उस चितितत्त्व में, जो कि स्वयं अविभक्त रूप है, नानाता (बहुरूपता) इस प्रकार मौजूद रहती है जैसे कि मोर के अण्डे के रस के भीतर उसकी पूँछ के नाना प्रकार के रङ्ग ॥ ९० ॥ जैसे जल में लहरों के उत्थान और पतन से जल से अन्य कोई रूप-परिवर्त्तन नहीं होता उसी प्रकार सृष्टि और प्रलयों के होने से ब्रह्म का अपना रूप तबदील नहीं होता (ब्रह्म वैसे का वैसा ही रहता है) ॥ ९१ ॥

**तादात्म्य :—**

जैसे 'कड़ा' शब्द का अर्थ सोने से कोई पृथक् वस्तु नहीं है और जैसे सोना कड़े से कोई पृथक् वस्तु नहीं है वैसे ही जगत् शब्द से कोई परम 'ब्रह्म' से अन्य वस्तु नहीं समझना चाहिये ॥ ९२ ॥ पाताल में, पृथ्वी पर, स्वर्ग में, प्राणियों में और आकाश में जो कुछ दिखाई देता है वह चित्रूप परम ब्रह्म ही है; और कुछ भी नहीं ॥ ९३ ॥

**जगत् का मिथ्यात्व :—**

आदि और अन्त में जो नित्य है वही 'सत्य' है, दूसरा नहीं; जो आदि और अन्त में सत्य है वही वर्त्तमान में भी सत्य है ॥ ९४ ॥ मृग-तृष्णा के जल के समान, अनुभव में आये हुए कल्पना-जगत् के समान, यह जगत् सत्य के समान प्रतीत होता हुआ भी अवास्तविक और असत्य

है ॥ ९५ ॥ जब तक अज्ञान है, जब तक ब्रह्मभावना का उदय नहीं हुआ, जब तक जगत् में आस्था है, तभी तक चित्त आदि की कल्पना दृढ़ रहती है ॥ ९६ ॥

**परम दृष्टिः—**

जगत् नाम की कोई वस्तु ही नहीं है। वास्तव में जगत् है ही नहीं। सब कुछ केवल ब्रह्म ही है ॥ ९७ ॥ अध्यात्म शास्त्रों का सब से ऊँचा सिद्धान्त यही है कि न अविद्या है, न माया है, केवल शान्त ब्रह्म ही सब कुछ है ॥ ९८ ॥ जगत् का ज्ञान होते हुए भी वास्तव में कुछ उत्पन्न नहीं हुआ। शुद्ध, अत्यन्त शून्य, परम आकाश अपने स्वरूप में स्थित है ॥ ९९ ॥

**आनन्द :—**

सब प्राणी आनन्द के लिये ही यत्न करते हैं, (किन्तु जीवन में आनन्द कहाँ? क्योंकि) सब सम्पत्ति आपत्ति रूप है और सुख केवल दुःख रूप है ॥ १०० ॥ जैसे अग्नि की ज्वाला के सिर पर धूएँ की कालिमा मौजूद रहती है वैसे ही संसार के सभी सुखों की आशाओं का अन्त दुःख में ही होता है ॥ १०१ ॥ धन और स्त्री पुत्र आदि की वृद्धि होने पर हर्ष का अवसर ही क्या है? मृगतृष्णा की नदी में यद्यपि बाढ़ भी आजाये तो भी जल की चाहवालों (प्यासों) को क्या आनन्द हो सकता है ॥ १०२ ॥ इच्छा के उदय होने पर जो दुःख होता है वह दुःख नरक में भी नहीं होता, और इच्छा के शान्त होने पर जो सुख होता है वह सुख ब्रह्मलोक में भी नसीब नहीं होता ॥१०३॥ इच्छा रहित होना राज्य से, स्वर्ग से, चन्द्रमा से, भगवान् से, प्रेमिका की प्रीति से भी अधिक सुखदाई है ॥ १०४ ॥ जैसे मरुभूमि में कहीं पर भी बर्फ़ नहीं होता वैसे ही जो अकृत्रिम सुख चित्त (इच्छा, वासना) के न उदय होने से होता है वह स्वर्ग जैसे स्थानों में भी नहीं प्राप्त हो सकता ॥ १०५ ॥ जैसे जिस आदमी ने स्वर्ग का

सुख देख लिया है उसका मन पृथ्वी पर नहीं लग सकता, वैसे ही जिसने कुछ समय के लिये भी आत्मा में स्थिति प्राप्त कर ली है उसका मन भोगों में नहीं लग सकता ॥ १०६ ॥

**बन्धन और मोक्ष :—**

आशा के फाँसों में बँधे हुए और वासना की रस्सियों से जकड़े हुए जीव संसार में बन्धन को इस प्रकार प्राप्त होते हैं जैसे रस्सी में बँधे हुए पक्षी ॥ १०७ ॥ जिसने अनन्त और अप्रमेय आत्मा को महदूद (परिच्छिन्न) मान लिया है उसने अपने आपको बन्धन में डाल दिया है ॥ १०८ ॥ ब्रह्मरूपी समुद्र में वास करते हुए भी हम लोग यह समझ कर कि हम ब्रह्म से कोई अलग वस्तु हैं—और इस प्रकार की भावना को दृढ़ करके—संसार की भयानक अवस्था में मोह को प्राप्त होते हैं ॥ १०९ ॥ संसार में घूमने और जन्मजन्मान्तर का फल पाने का हेतु जीवों के लिये आत्मा को भूलने के सिवाय कुछ भी नहीं है ॥ ११० ॥ "मैं यह हूँ" इस प्रकार का सङ्कल्प नाशकारी बन्धन में डालने वाला है और "मैं यह नहीं हूँ" इस संकल्प से मोक्ष प्राप्त होता है ॥ १११ ॥ आत्मा के अज्ञान से ही भ्रम उत्पन्न होता और आत्मा के ज्ञान से ही ज्ञान की अन्तिम सीमा की प्राप्ति होती है ॥११२ ॥ मिथ्या ज्ञान से उत्पन्न हुई अज्ञान की झूठी गाँठ, जो अहंभाव के रूप में अनुभूत हो रही है, जब खुल जाती है तब मोक्ष का अनुभव होता है ॥ ११३ ॥

**मोक्ष का उपाय :—**

बुद्धिमान् लोग दुस्तर संसार-समुद्र से ज्ञान-युक्तिरूपी नौका द्वारा क्षण भर में पार हो जाते हैं ॥ ११४ ॥ तीर्थ से, दानसे, स्नान से, विद्या से, ध्यान से, योग से, तप से और यज्ञ से मुक्ति प्राप्त नहीं होती ॥ ११५ ॥ आत्मा ही आत्मा का बन्धु है; आत्मा ही आत्मा का शत्रु है। यदि आत्मा आत्मा को नहीं बचा सकता तो दूसरा और कोई उपाय नहीं है ॥ ११६ ॥ जो कुछ कहीं पर कोई प्राप्त

करता है, वह अपनी शक्ति के प्रयोग से ही प्राप्त करता है। दूसरे किसी उपाय से किसी को कुछ नहीं मिलता ॥ ११७ ॥ जैसे कि धान्यों के सौन्दर्य की उत्पादक यह पृथ्वी है उसी प्रकार सब उत्तम स्थान और चिरकाल तक स्थिर रहने वाली सम्पदायें मन को वश में करने से ही प्राप्त होती हैं ॥ ११८ ॥ यदि विष्णु आदि देवताओं को प्रसन्न करने का यत्न कर सकते हो तो अपने मन ही को शुद्ध करने का यत्न क्यों नहीं करते ॥ ११९ ॥ सब प्राणियों के हृदय में विष्णु (आत्मा) निवास करते हैं। अपने भीतर रहने वाले विष्णु को छोड़ कर जो लोग विष्णु की तलाश बाहर करते हैं वे अधम हैं ॥ १२० ॥ यदि गुरु आदि किसी व्यक्ति का उसके अपने पुरुषार्थ के बिना ही उद्धार कर सकते हैं तो वे ऊँट, हाथी और बैल का उद्धार क्यों नहीं कर देते ॥ १२१ ॥ कर्म की जड़ वासनात्मक मन की संवित् है। इस लिये शरीर जब तक रहता है तब तक कर्म का त्याग नहीं हो सकता ॥ १२२ ॥

ज्ञान-सिद्धि :—

ज्ञानबन्धु वह है जो शास्त्रों का पठन और चर्चा शिल्पकार की नाईं भोगों को प्राप्त करने के लिये करता है, उनके अनुसार चलने के लिये नहीं ॥ १२३ ॥ सैकड़ों जन्मों में अनुभूत होने के कारण बहुत दृढ़ हुई संसारभावना का क्षय बिना बहुत समय तक ( ज्ञान का अभ्यास और योग किये नहीं होता ॥ १२४ ॥ योग ( संसार से पार उतरने की युक्ति ) शब्द के तीन अर्थ हैं :—( १ ) एक तत्त्व का गहरा अभ्यास, ( २ ) प्राणों का निरोध और ( ३ ) मन का निग्रह ॥ १२५ ॥ इन तीनों प्रयोगोंमें से मन को शान्त करना सबसे उत्तम है। इसके सिद्ध हो जाने पर शीघ्र ही कल्याण हो जाता है ॥ १२६ ॥ वैराग्य, कारण का अभ्यास, व्यसन-क्षय, और परमार्थ का ज्ञान— इन से प्राण वायु का निरोध होता है ॥ १२७ ॥ इस माया-चक्र की नाभि मन है। यदि उसको जोर से पकड़ कर स्थिर कर दिया जाये तो फिर संसार

दुःख नहीं देता ॥ १२८ ॥ विचार द्वारा मन विलीन हो जाता है, और मन के लय हो जाने पर ही कल्याण होता है ॥ १२९ ॥ महाराज ! वासना को ही चित का स्वरूप जानो। वासना और चित्त दोनों पर्यायवाची शब्द हैं ॥ १३० ॥

**ज्ञान की सात भूमिकायेँ :—**

आत्मा का बोध देने वाले ज्ञान की सात भूमिकायें हैं : मुक्ति इन सातों भूमिकाओं से परे है ॥ १३१ ॥ सात भूमिकायें ये हैं :— १. शुभेच्छा, २. विचारणा, ३. तनुमानसा ॥ १३२ ॥ ४. सत्त्वापत्ति, ५. असंसक्ति, ६. पदार्थाभावनी और ७. तुर्यगा ॥ १३३ ॥

**कर्म-बन्धन का कटना :—**

संसार में ऐसा कोई स्थान—पहाड़, आकाश, समुद्र, स्वर्ग आदि नहीं है जहाँ पर अपने किये हुए कर्मों का फल न मिलता हो ॥ १३४ ॥ सब कर्मों का बीज मन का स्पन्दन है। यह सुना भी जाता है और अनुभव में भी यही आता है। विविधि प्रकार की क्रियायें जो नाना प्रकार के फल लाती हैं उसकी अनेक शाखायें हैं ॥ १३५ ॥ परम ब्रह्म से सारे जीव बिना किसी कारण ( पूर्व कर्म के ) आप से आप ही उदय हो जाते हैं। उत्पन्न होने के पीछे उनके अपने कर्म उनके दुःख-सुख के कारण हो जाते हैं ॥ १३६ ॥ वासना के क्षीण हो जाने पर ज्ञानी को अपनी किसी क्रिया का फल नहीं भोगना पड़ता। वासना के अभाव से सब क्रियायें फलरहित हो जाती हैं; चाहे वे अशुभ फल देने वाली ही क्यों न हों—जैसे कि सींचे विना लता सूख जाती है ॥ १३७ ॥ सम, शुद्ध और विकार-रहित बुद्धि से जो कुछ भी किया जाता है वह कभी दोष नहीं लाता ॥ १३८ ॥

**आत्मा का अनुभव :—**

जैसे कतक ( एक फल का नाम ) को पानी में डालते ही पानी निर्मल हो जाता है वैसे ही, पक्षियों के जाल के चूहे द्वारा कट जाने की

नाईं, वैराग्य से संसार की वासनाओं के जाल के कट जाने पर, और हृदय की ग्रन्थियों के ढीला होकर खुल जाने पर, ज्ञान के कारण उस व्यक्ति के भीतर आत्मा का प्रकाश हो जाता है ॥ १३९, १४० ॥

जीवन्मुक्त के लक्षण :—

मुक्त पुरुष को न किसी वस्तु के प्रति रसिकता होतीं है और न नीरसता । वह विषयों का इच्छुक होकर विषयों में नहीं रमता ॥ १४१ ॥ वे दूसरों के मन के भावों को जान कर लोकप्रिय आचरण करते हैं और प्रिय और मधुर वाणी बोलते हैं । वे क्षण भर में कार्यों का विवेचन और निर्णय कर लेते हैं ॥ १४२ ॥ मुक्त पुरुष प्राप्त वस्तु की उपेक्षा नहीं करता, और अप्राप्त वस्तु की वाञ्छा नहीं करता; सब वृत्तियों में अपने अन्दर शान्त और शीतल रहता है ॥१४३॥ वे नागरिक जनों के समान आचार वाले और सबके बन्धु होते हैं; बाहर से तो वे सब काम करते हुए दिखाई पड़ते हैं लेकिन भीतर सब प्रकार से शान्त रहते हैं ॥१४४॥ मुक्त पुरुष वर्ण, धर्म, आश्रम, आचार और शास्त्रों की यन्त्रणा से बरी होकर जगत् के जञ्जाल से इस प्रकार निकल भागता है जैसे पिञ्जरे से शेर ॥१४५॥ न वह डरता है, न वह विवश और दीन होता है; वह मौनी, सम और स्वस्थ मन होकर पर्वत के समान धीरता से रहता है ॥१४६॥ जैसा अवसर हो उसके अनुसार असक्त मन से वह भक्त के प्रति भक्त का सा, शठ के प्रति शठ का सा ॥१४७॥ बालक के प्रति बालक का सा, वृद्धों के प्रति वृद्धों का सा, धीरों के प्रति धीरता का व्यवहार करता है। यौवन-वृत्तिवालों में वह युवा की नाईं रहता है और दुःखियों को देखकर दुःखी होता है ॥१४८॥ जैसे आँख देखने का आनन्द लेती है वैसे ही वह भी बिना विशेष यत्न किये यथा प्राप्त भोगों को लीला से असक्त मन होकर भोगता रहता है ॥१४९॥ ज्ञानी लोग जगत् के व्यवहार को न त्यागते हैं और न उसकी कामना ही करते हैं। जैसा जैसा अवसर होता है वे वैसा ही व्यवहार करते हैं ॥१५०॥ जिसके भीतर सदा सत्त्व का

